सर्गे सार्धसप्तत्रिंशच्छ्लोकाः ॥३१–३८॥ इति श्रीगोविन्द० श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥
अथेत्यादि । हे नरव्याघ्र ! तव स्नेहात्, मयीति शेषः । सौहार्दात् सुहृद्भावात्, आप्तत्वादिति यावत् । अनुमान्य सम्मान्य । उत्तरं ततः परम् उत्तरं

अथाहमुत्तरं देव्या पुनरुक्तः ससम्भ्रमः । तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य वै ॥१॥ एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया । यथा मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २ ॥ यदि वा मन्यसे वीर वसैकाहमरिन्दम । कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि ॥ ३ ॥ मम चाप्यल्पभाग्यायाः सान्निध्यात्तव वीर्यवन् । अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ ४ ॥ गते हि त्वयि विक्रान्ते पुनरागमनाय वै । प्राणानामपि सन्देहो मम स्यान्नात्र संशयः ॥ ५ ॥ तवादर्शनजः शोको भूयो मां परितापयेत् । दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६ ॥ अयं च वीर सन्देहस्तिष्ठतीव ममाग्रतः । सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ ७ ॥ कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् । तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥ त्रयाणामेव भूतानां सागरस्यास्य लङ्घने । शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९ ॥

कार्यं वा । पुनर्देव्याऽहमुक्त इत्यन्वयः । ससम्भ्रमः गमनत्वरान्वित इत्यर्थः ॥ १ ॥ २ ॥ शोकविपाकस्य शोकवृद्धेरित्यर्थः ॥ ३–९ ॥ रामानु०–प्राणानामपि सन्देहो मम स्यान्नात्र संशयः इत्यतः परं तवादर्शनजः शोक इति श्लोकः । अतः परम् अयं च वीर सन्देह इति श्लोकः । केषुचित्कोशेष्वेतच्छ्लोकद्वयं प्रमादात्पतितम् ॥ ५–७ ॥

मानम्, समुद्रतरणायेति शेषः ॥ ३३–३८ ॥ इति श्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायां सप्तषष्टितमः सर्गः ॥ ६७ ॥
अथेति । हे नरव्याघ्र ! तव स्नेहात्, मयीति शेषः । सौहार्दात् सुहृद्भावात्, आप्तत्वादिति यावत् । अनुमान्य सम्मान्य च । उत्तरं ततः परम् उत्तरं कार्यं वा पुनः पुनर्देव्या ससम्भ्रमः गमनत्वरान्वितः अहम् उक्त इत्यन्वयः ॥ १ ॥ किमुक्तम् ? तदाह–एवमित्यादि ॥ २ ॥ यदीत्यादि श्लोकद्वयमेकं वाक्यम् । हे वीर ! यदि वा मन्यसे एकाहं वस । तावता किमायातम् ? अत आह कस्मिंश्चिदिति । अरिन्दम! कस्मिंश्चित्संवृते देशे विश्रान्तः श्वो गमिष्यसि चेत् तव सान्निध्याद‌ल्पभाग्याया मम अस्य महतः शोकविपाकस्य शोकरूपस्य पापपरिणामस्य फलस्येत्यर्थः । मुहूर्तं मोक्षणं स्यादिति योजना ॥ ३ ॥ ४ ॥ पुनरागमनाय प्रतीक्षमाणाया मम

कार्यनियोगे कार्यगतौ । दुरतिक्रमे दुर्निर्वहे ॥ १०--२२ ॥ तदलमिति । मन्युः दैन्यम् । " मन्युर्दैन्ये क्रतौ क्रुधि " इत्यमरः ॥ २३–२८ ॥

तदस्मिन् कार्यनियोगे वीरैवं दुरतिक्रमे । किं पश्यसि समाधानं ब्रूहि कार्यविदां वर ॥१०॥ काममस्य त्वमेवैकः कार्यस्य परिसाधने । पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥ बलैः समग्रैर्यदि मां हत्वा रावणमाहवे । विजयी स्वां पुरीं रामो नयेत्तत् स्याद्यशस्करम् ॥१२॥ यथाऽहं तस्य वीरस्य वनादुपधिना हृता । रक्षसा तद्भया देव तथा नार्हति राघवः ॥ १३ ॥ बलैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः । मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४ ॥ तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः । भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५ ॥ तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् । निशम्याहं ततः शेषं वाक्यमुत्तरमब्रुवम् ॥ १६ ॥ देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः । सुग्रीवः सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥ १७ ॥ तस्य विक्रमसम्पन्नाः सत्त्ववन्तो महाबलाः । मनस्सङ्कल्पसम्पाता निदेशे हरयः स्थिताः ॥१८॥ येषां नोपरि नाधस्तान्न तिर्यक् सज्जते गतिः । न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९ ॥ असकृत्तैर्महाभागैर्वानरैर्बलदर्पितैः । प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥२०॥ मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः । मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ २१ ॥ अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः । न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥२२॥ तदलं परितापेन देवि मन्युर्व्यपैतु ते । एकोत्पातेन वै लङ्कामेष्यन्ति हरियूथपाः ॥२३॥ मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ । त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४ ॥

प्राणानामपि सन्देहः स्यादिति सम्बन्धः ॥ ५–१० ॥ यद्यपि त्वमेव पर्याप्तः, सकलराक्षसवधपूर्वं मन्मोचन इति शेषः । तथापि ईदृशो बलोदयस्तवैव यशस्यः यशोवर्धकः स्यात् ॥ ११ ॥ यदि तु रामो रावणं हत्वा मां नयेत् तदा तन्नयनं तस्य यशस्करं स्यात् ॥ १२--२२ ॥ तदलमिति । मन्युः दैन्यम् ॥ २३–२८ ॥

अदीनभाषिणा मया। शिवाभिः इष्टाभिः वाग्भिः अभिप्रसादिता
तव शोकेनापि 'नैव दंशान्' इत्यादिमदुक्त्या श्रुतेन। तदा मम पुरस्तादभिपीडिता।

लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ २५ ॥ नखदंष्ट्रायुधान्
अरिघ्नं सिंहसङ्काशं क्षिप्रं द्रक्ष्यसि राघवम्। शैलाम्बुदनिकाशानां लङ्का
वीरान् सिंहशार्दूलविक्रमान्। वानरान् वारणेन्द्राभान् क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥२६॥ निवृत्तवनवासं च त्वया सार्धमरिन्दमम्।
मलयसानुषु। नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥ २७ ॥ ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसा
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये
दिता। जगाम शान्तिं मम मैथिलात्मजा तवापि शोकेन तदाऽभिपीडिता ॥ २९ ॥ सुन्दरकाण्डः समाप्तः ॥
आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां श्रीमत्सुन्दरकाण्डे अष्टषष्टितमः सर्गः ॥६८॥

शान्तिं दुःखनिवृत्तिं जगाम॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥६८॥

इत्थं कौशिकवंशमौक्तिकमणिर्गोविन्दराजाभिधो वात्स्यश्रीशठकोपदेशिकपदद्वन्द्वैकसेवारतः।
पूर्वाचार्यकृता विलोक्य विविधा व्याख्या मुहुर्जानकीकान्तस्याप्रतिमाज्ञयैव तिलकं सौन्दर्यकाण्डे व्यधात् ॥ १ ॥

अदीनभाषिणा मया शिवाभि
तत इति। तव शोकेनापि 'नैव दंशान्' इत्यादिपूर्वमुक्तया मदुक्त्या श्रुतेन त्वच्छोकेनापि मम पुरस्तदाऽभिपीडिता।
रिष्टाभिः वाग्भिरभिप्रसादिता शान्तिं दुःखनिवृत्तिं जगामेति योजना ॥ २९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थ
विरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

महेशतीर्थरचिता रामपादसमर्पिता। व्याख्या सुन्दरकाण्डस्य समाप्ता तत्त्वदीपिका ॥

श्रीमत्सुन्दरकाण्डपठनश्रवणयोः फलम्। ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये—

काण्डस्य सुन्दराख्यस्य श्रवणात्पठनादपि। मां प्राप्नुयाज्जगद्धेतुं नात्र सन्देह इष्यते ॥

॥ इति श्रीमद्वाल्मीकिरामायणे सुन्दरकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका–तिलक-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितञ्च ।